# मीमांसा-दर्शनम्।



जैमिनि-प्रणीतम्।

श्रीशवरस्वामिकृतेन भाष्येण सहितम्।



—:❀:—



बि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च।



प्रथमात् षष्ठाध्याय-पर्य्यन्तम्



कलिकाता-

सारसुधानिधियन्त्रे मुद्रितम्।

इ० १८८३।

# सङ्केत-सूचनम्।

—०—

| सङ्केतः | | अर्थः। |
|---|---|---|
| अ० | ... | अधिकरणम्। |
| अ० पा० अ० | ... | अध्याये पादे अधिकरणम्। |
| अ० पा० अधि० | ... | " " " |
| आ० | ... | आशङ्का वा आपत्तिः। |
| आ० नि० | ... | आशङ्कायाः आपत्तेर्वा निरासः। |
| आभा० | ... | आभासः। |
| आश० | ... | आशङ्का। |
| उ० | ... | उत्तरम्। |
| उप० | ... | उपसंहारः। |
| उ० यु० | ... | उत्तरे युक्तिः। |
| द्वि० | ... | द्वितीयम्। |
| द्वि० पू० | ... | द्वितीयः पूर्वपक्षः। |
| नि० | ... | निराकरणम्। |
| पू० | ... | पूर्वपक्षः। |
| पू० आ० नि० | ... | पूर्वपक्षे आशङ्कानिरासः। |
| पू० नि० | ... | पूर्वपक्षनिरासः। |
| पू० पू० | ... | पूर्वपक्षे पूर्वपक्षः। |
| पू० यु० | ... | पूर्वपक्षे युक्तिः। |
| प्र० | ... | प्रथमम्। |

प्र० पू० ... प्रथम-पूर्वपक्षः ।
भा० ... भाष्यम् ।
व्या० ... व्याख्या ।
सि० ... सिद्धान्तः ।
सि० आ० ... सिद्धान्ते आशङ्का ।
सि० आ० नि० ... सिद्धान्ते आशङ्कानिरासः ।
सि० यु० ... सिद्धान्ते युक्तिः ।
सि० हे० ... सिद्धान्ते हेतुः ।
सू० ... सूत्रम् ।
हे० ... हेतुः ।

—०—

# मीमांसादर्शनम्

## सभाष्यम्।

प्रथमाध्यायस्य प्रथमः पादः।

धर्म्मजिज्ञासाधिकरणम्।

सू. अथातो धर्मजिज्ञासा ॥ १ ॥

भा०। लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्। नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा। एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते। इतरथा वेदवाक्यानि व्याख्येयानि, स्वपदार्थाश्च व्याख्येयाः इति प्रयत्नगौरवं प्रसज्येत। तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः, न चेह किञ्चिद्वृत्तमुपलभ्यते। भवितव्यन्तु तेन, यस्मिन् सति अनन्तरं धर्म्मजिज्ञासाऽवकल्पते। तथाहि, प्रसिद्धपदार्थिकः स कल्पितो भवति, तत्तु वेदाध्ययनं, तस्मिन् हि सति सा अवकल्पते। नैतदेवं, अन्यस्यापि कर्म्मणोऽनन्तरं कर्म्मजिज्ञासा युक्ता प्रागपि च वेदाध्ययनात्। उच्यते,— वेदाध्ययनान्तु धर्म्मजिज्ञासां अधिकृत्याथशब्दं प्रयुक्तवानाचार्य्यः, या वेदाध्ययनमन्तरेण न सम्भवति। कथं? वेदवाक्यानामनेकविधो विचार इह वर्त्तिष्यते। अपिच, नैव अर्थानिह वेदाध्ययनात् पूर्वं धर्म्मजिज्ञासायाः प्रतिषेधं शिष्मः,

प्रसिद्धः, नतरां । तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम्, अथवाऽर्थवत् ?। धर्मं प्रति हि विप्रतिपन्ना बहुविदः,—केचिदन्यं धर्ममाहुः, केचिदन्यं । सोऽयमविचार्य्य प्रवर्त्तमानः कञ्चिदेवोपाददानो विहन्येत, अनर्थं च ऋच्छेत्, तस्माद्धर्मो जिज्ञासितव्य इति ; स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे । तदभिधीयते

धर्मलक्षणाधिकरणम् ।

## सू. चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

भा. चोदना—इति क्रियायाः प्रवर्त्तकं वचनमाहुः, आचार्य्यचोदितः करोमीति हि दृश्यते । लक्ष्यते येन तल्लक्षणं,धूमो लक्षणमग्नेरिति हि वदन्ति । तया यो लक्ष्यते, सोऽर्थःपुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे । चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्टमित्येवंजातीयकमर्थं, शक्नोत्यवगमयितुं नान्यत् किञ्चनेन्द्रियम् । न च तथाभूतमप्यर्थं ब्रूयाच्चोदना, यथा यत्किञ्चन लौकिकं वचनं,—नद्यास्तीरे फलानि सन्ति—इति । तत् तथ्यमपि भवति, वितथमपि भवतीति । उच्यते, विप्रतिषिद्धमिदमुच्यते,—ब्रवीति, वितथञ्च इति, ब्रवीति—इति उच्यतेऽवबोधयति बुध्यमानस्य निमित्तं भवति इति, यस्मिंश्च निमित्तभूते सति अवबुध्यते, सोऽवबोधयति । यदि च चोदनायां सत्यामग्निहोत्रात् स्वर्गो भवतीति गम्यते, कथमुच्यते,—न तथा भवतीति । अथ न तथा भवतीति, कथमवबुध्यते ? असन्तमवबुध्यते—इति विप्रतिषिद्धम् । नच स्वर्गकामो

यजेत—इत्यतो वचनात् सन्दिग्धमवगम्यते,—भवति वा स्वर्गो न वा भवति—इति । नच निश्चितमवगम्यमानमिदं मिथ्या स्यात्, यो हि जनित्वा प्रध्वंसते—नैतदेवमिति, स मिथ्याप्रत्ययः । नचैष कालान्तरे, पुरुषान्तरे, अवस्थान्तरे, देशान्तरे वा विपर्य्येति । तस्मादवितथः । यत्तु लौकिकं वचनं, तच्चेत् प्रत्ययितात् पुरुषात्, इन्द्रियविषयं वा, अवितथमेव तत् । अथाप्रत्ययितात् अनिन्द्रियविषयं वा, तावत् पुरुषबुद्धिप्रभवमप्रमाणम्, अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात् । अपरस्मात्पौरुषेयाद्वचनात् तदवगतम्—इति चेत् ? तदपि तेनैव तुल्यम्, नैवंजातीयकेषु अर्थेषु पुरुषवचनं प्रामाण्यमुपैति, जात्यन्धानामिव वचनं रूपविशेषेषु, नच विदुषामुपदेशो नावकल्पते, उपदिष्टवन्तश्च मन्वादयस्तस्मात् पुरुषात् सन्तो विदितवन्तश्च, यथा चक्षुषा रूपमुपलभ्यते, इति दर्शनादेवावगतम् । उच्यते । उपदेशा हि व्यामोहादपि भवन्ति, असति व्यामोहे वेदादपि भवन्ति । अपि च, पौरुषेयाद्वचनात् एवं अयं पुरुषो वेद—इति भवति प्रत्ययः, न एवं अयमर्थः—इति । विप्लवते हि खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः, न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति । ननु सामान्यतो दृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसाम्यादिदमपि वितथमवगम्यते । न अन्यत्वात्, न ह्यन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवितुमर्हति, अन्यत्वादेव, न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति । अपि च पुरुषवचनसाधर्म्यात् वेद-

वचनं वितथम्—इति अनुमानं व्यपदेशादवगम्यते, प्रत्यक्षस्तु वेदवचनेन प्रत्ययः, न चानुमानं प्रत्यक्षविरोधि प्रमाणं भवति। तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः। एवं तर्हि श्रेयस्करो जिज्ञासितव्यः, किं धर्मजिज्ञासया?'। उच्यते,—य एव श्रेयस्करः, स एष धर्मशब्देनोच्यते। कथमवगम्यतां?। यो हि यागमनुतिष्ठति, तं धार्मिकः—इति समाचक्षते, यश्च यस्य कर्त्ता, स तेन व्यपदिश्यते, यथा पाचकः, लावक इति। तेन, यः पुरुषं निःश्रेयसेन संयुनक्ति, स धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि यज्ञेन यज्ञं अयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्' —इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति। उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्च इति। कोऽर्थः? यो निःश्रेयसाय, ज्योतिष्टोमादिः। कोऽनर्थः? —यः प्रत्यवायाय, श्येनो, वज्रः, इषुरित्येवमादिः। तत्र अनर्थो धर्म उक्तो मा भूत् इति अर्थग्रहणम्। कथं पुनरसावनर्थः? हिंसा हि सा, हिंसा च प्रतिसिद्धेति। कथं पुनरनर्थः कर्त्तव्यतयोपदिश्यते?। उच्यते,— नैव श्येनादयः कर्त्तव्या विज्ञायन्ते, यो हि हिंसितुमिच्छेत्, तस्यायमभ्युपायः—इति हि तेषामुपदेशः, श्येनेनाभिचरन् यजेत—इति हि समामनन्ति, न अभिचरितव्यम्—इति। ननु अशक्तं इदं सूत्रं, इमावर्थावभिवदितुं,—चोदनालक्षणो धर्मः, न इन्द्रियादिलक्षणः। अर्थश्च धर्मः, न अनर्थ इति। एकं हीदं वाक्यं, तदेवं सति भिद्येत। उच्यते,—यत्र वाक्यादर्थोऽवगम्यते, तत्रैवम्, तत्तु वैदिकेषु, न सूत्रेषु, अन्यतोऽवगतेऽर्थे

सूत्रम् एवमर्थमिदम्—इत्यवगम्यते। तेन च एकदेशः सूच्यते—इति सूत्रं। तत्र भिन्नयोरिव वाक्ययोरिमावेकदेशावित्यवगन्तव्यम्। अथवा अर्थस्य सतश्चोदनालक्षणस्य धर्म्मत्वमुच्यते इति एकार्थमेवेति।

धर्म्मप्रामाण्यपरीक्ष्यताधिकरणम्।

सू. **तस्य निमित्तपरीष्टिः॥ ३॥**

उक्तमस्माभिः चोदनानिमित्तं धर्म्मस्य ज्ञानम्, इति। तत् प्रतिज्ञामात्रेणोक्तम्, इदानीं तस्य निमित्तं परीक्षिष्यामहे,—किं चोदनैवेति, अन्यदपीति। तस्मान्न तावन्निश्चीयते चोदनालक्षणोऽर्थो धर्म्मः—इति। तदुच्यते

धर्म्मे प्रत्यक्षस्य अप्रमाणतायाः अधिकरणम्।

सू. **सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भनत्वात्॥ ४॥**

इदं परीक्ष्यते,—प्रत्यक्षं तावदनिमित्तम्। किं कारणं?। एवंलक्षणकं हि तत्, सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म, तत् प्रत्यक्षं, सति इन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते, तत् प्रत्यक्षं, भविष्यन् च एषोऽर्थो, न ज्ञानकालेऽस्तीति, सतश्चैतदुपलम्भनं, नासतः। अतः प्रत्यक्षमनिमित्तम्। बुद्धिर्वा, जन्म वा, सन्निकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत् सूत्रं। सति इन्द्रियार्थसम्प्रयोगे, नासति इत्येतावदवधार्य्यते, अनेकस्मिन्नवधार्य्यमाणे भिद्येत वाक्यम्। प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति॥

अभावोऽपि नास्ति यतः

धर्मे वेदप्रामाण्यस्याधिकरणम्।

सू. औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञान-मुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

औत्पत्तिकः—इति नित्यं ब्रूमः, उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धः, नोत्पन्नयोः पश्चात् सम्बन्धः, औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः, तस्य अग्निहोत्रादिलक्षणस्य धर्म्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य। कथं ? उपदेशो हि भवति, उपदेशः इति विशिष्टस्य शब्दस्य उच्चारणम्। अव्यतिरेकश्च ज्ञानस्य, न हि तदुत्पन्नं ज्ञानं विपर्य्येति। यच्च नाम ज्ञानं न विपर्य्येति, न तत् शक्यते वक्तुं, न एतदेवम्—इति। यथा विज्ञायते, न तथा भवति, यथैतन्न विज्ञायते, तथैतदिति, अन्यदस्य हृदये, अन्यद्वाचि स्यात्, एवं वदतो विरुद्धमिदं गम्यते,—अस्ति नास्ति वेति। तस्मात् तत् प्रमाणमनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वापि, अयं प्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्त्यते बादरायणं पूजयितुं, नात्मीय मतं पर्य्युदसितुम्।

वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयाञ्चकार, तस्य निमित्त-परीष्टिः—इत्येवमादिं,—न परीक्षितव्यं निमित्तं, प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि, तदन्तर्गतञ्च शास्त्रं, अतस्तदपि न परीक्षितव्यम्। अत्रोच्यते,—व्यभिचारात् परीक्षितव्यम्—शुक्तिका हि रजतवत् प्रकाशते यतः, तेन

प्रत्यक्षं व्यभिचरति, तन्मूलत्वाच्चानुमानादीन्यपि । तत्रा परीक्ष्य प्रवर्त्तमानोऽर्थात् विहन्येत, अनर्थं चाप्नुयात् कदाचित् । नैतदेवं,—यत् प्रत्यक्षं न तत् व्यभिचरति । यत् व्यभिचरति, न तत् प्रत्यक्षम् । किं तर्हि प्रत्यक्षम् ? तत्सम्प्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम् । यद्विषयं ज्ञानं, तेनैव सम्प्रयोगे इन्द्रियाणां, पुरुषस्य बुद्धि-जन्म सत्प्रत्यक्षम् । यदन्यविषयज्ञानमन्यसम्प्रयोगे भवति, न तत् प्रत्यक्षम् । कथं पुनरिदमवगम्यते ? इदं तत् सम्प्रयोगे, इदमन्य सम्प्रयोगे इति । यत् न अन्यसम्प्रयोगे, तत् तत्सम्प्रयोगे, एतद्विपरीतमन्यसम्प्रयोग इति । कथं ज्ञेयम् ? यत् शुक्तिकायामपि रजतं मन्यमानो रजतसन्नि-कृष्टं मे चक्षुरिति मन्यते । बाधकं हि यत्र ज्ञानमुत्पद्यते, —नैतदेवं, मिथ्याज्ञानमिति, तत् अन्यसम्प्रयोगे, विपरीतं तत्सम्प्रयोगे इति । प्राग्बाधकज्ञानोत्पत्तेः कथमवगम्यते ? यदा न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्वि-शेषः । यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्वाह्यो वा विषयः, ततो मिथ्याज्ञानं, अनुपहतेषु हि सम्यक्ज्ञानं । इन्द्रियमनोऽर्थ-सन्निकर्षो हि सम्यक्ज्ञानस्य हेतुः, असति तस्मिन् मिथ्या-ज्ञानं, तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः । दुष्टेषु हि ज्ञानं मिथ्या भवति । कथमवगम्यते ? । दोषापगमे सं-प्रतिपत्तिदर्शनात् । कथं दुष्टादुष्टावगमः ? इति चेत् । प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेमहि, प्रमाणाभावा-ददुष्टमिति मन्येमहि । तस्मात् यस्य च दुष्टं करणं, यत्र

च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्य इति।

ननु सर्व एव निरालम्बनः स्वप्नवत्प्रत्ययः, प्रत्ययस्य हि निरालम्बनता—स्वभाव उपलक्षितः स्वप्ने, जाग्रतोऽपि स्तम्भः—इति वा कुड्यः—इति वा प्रत्यय एव भवति। तस्मात् सोऽपि निरालम्बनः। उच्यते,—स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्य्यसिष्यतीति? स्वप्नेऽप्येवमेव सुपरिनिश्चिताऽऽसीत्, प्राक्प्रबोधनात् न तत्र कश्चिद्विशेष इति। न, स्वप्ने विपर्य्ययदर्शनात्। अविपर्य्ययाच्च इतरस्मिन्। तत्सामान्यादितरत्रापि भविष्यति, इति चेत्। यदि प्रत्ययत्वात् स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति। अथ प्रतीतिस्तु तथाभावस्य हेतुः। न शक्यते प्रत्ययत्वात् अयमन्यः—इति वक्तुम्। अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्य्ययादवगतः। कुतः?—इति चेत्। सनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ स्वप्नान्ते च। सुषुप्तस्याभाव एव। अचेतयन्नेव हि सुषुप्तः—इत्युच्यते। तस्माज्जाग्रतः प्रत्ययो न मिथ्येति। ननु जाग्रतोऽपि करणदोषः स्यात्। यदि स्यात्, अवगम्येत। स्वप्नदर्शनकालेऽपि नावगम्यते—इति चेत्। तत्र प्रबुद्धो ह्यवगच्छति निद्राक्रान्तं मे मनः आसीत्—इति।

शून्यस्तु। कथं? अर्थज्ञानयोराकारभेदं नोपलभामहे। प्रत्यक्षा च नो बुद्धिः, अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः। स्यादेतदेवं, यद्यर्थाकारा बुद्धिः स्यात्। निराकारा तु नो बुद्धिः, आकारवान्

बाह्योऽर्थः। स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते। अर्थ-
विषया हि प्रत्यक्षबुद्धिः, न बुद्ध्यन्तरविषया। क्षणिका हि
सा, न बुद्ध्यन्तरकालमवस्थास्यते इति। उत्पद्यमानै-
वासौ ज्ञायते, ज्ञापयति च अर्थान्तरं, प्रदीपवदिति—
यत् उच्येत। तन्न। नह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते।
ज्ञाते तु अनुमानादवगच्छति, तत्र यौगपद्यमनुपपन्नम्।
ननु उत्पन्नायामेव बुद्धौ ज्ञातोऽर्थः—इत्युच्यते, नानुत्-
पन्नायां, अतः पूर्वं बुद्धिरुत्पद्यते, पश्चात् ज्ञातोऽर्थः।
सत्यं, पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते। भवति हि
कदाचिदेतत्, यत्, ज्ञातोऽप्यर्थः सन् अज्ञातः—इत्यु-
च्यते। नचार्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम्। तस्मान्न
व्यपदेश्या बुद्धिः, अव्यपदेश्यं च नाप्रत्यक्षम्। तस्माद-
प्रत्यक्षा बुद्धिः। अपि च काममेकरूपत्वे बुद्धेरेवाभावः,
नार्थस्य प्रत्यक्षस्य सतः। न च ऐकरूप्यम्, अनाकारामेव
हि बुद्धिमनुमिमीमहे, साकारं चार्थं प्रत्यक्षमेवावग-
च्छामः। तस्मादर्थालम्बनः प्रत्ययः। अपि च नियत-
निमित्तः तन्तुष्वेव उपादीयमानेषु पटप्रत्ययः। इतरथा
तन्त्वादानेऽपि कदाचित् घटबुद्धिरविकलेन्द्रियस्य स्यात्।
नचैवमस्ति, अतो न निरालम्बनः प्रत्ययः। अतो न
व्यभिचरति प्रत्यक्षम्।

अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽस-
न्निकृष्टेऽर्थे बुद्धिः। तत्तु द्विविधम्—प्रत्यक्षतोदृष्टसम्बन्धं,
सामान्यतोदृष्टसम्बन्धञ्च। प्रत्यक्षतोदृष्टसम्बन्धं यथा, धूमा-
कृतिदर्शनादग्न्याकृतिविज्ञानम्। सामान्यतोदृष्टसम्बन्धं

यथा, देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्य-गतिस्मरणम्। शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम्। उपमानमपि सादृश्यं असन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा, गवयदर्शनं गोस्मरणस्य। अर्थापत्तिरपि दृष्टः, श्रुतो वाऽर्थोऽन्यथा नोपपद्यते—इत्यर्थकल्पना। यथा, जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना। अभावोऽपि प्रमाणाभावो नास्ति—इत्यस्यार्थस्यासन्निकृष्टस्य। तस्मात्, प्रसिद्धत्वात् न परीक्षितव्यं निमित्तम्।

ननु प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि, शब्दस्तु न प्रमाणम्। कुतः? अनिमित्तं विद्यमानोपलम्भनत्वात् (७।१२)। अनिमित्तं अप्रमाणं शब्दः। यो ह्युपलम्भनविषयः नोपलभ्यते, स नास्ति, यथा शशस्य विषाणम्। उपलम्भकानि चेन्द्रियाणि पश्वादीनां, नच, पशुकामेष्ट्यनन्तरं पशवः उपलभ्यन्ते। अतो नेष्टिः पशुफला। कर्म्मकाले च फलेन भवितव्यं, यत्काले हि मर्दनं, तत्काले मर्दनसुखम्। कालान्तरे फलं दास्यति इति चेत्? न। न कालान्तरे फलमिष्टेः—इत्यवगच्छामः कुतः? यदा तावदसौ विद्यमाना आसीत्, तदा फलं न दत्तवती। यदा फलमुत्पद्यते, तदाऽसौ नास्ति। असती कथं दास्यति?

प्रत्यक्षञ्च फलकारणमन्यत् उपलभामहे। न च दृष्टे कारणे सति, अदृष्टं कल्पयितुं शक्यते, प्रमाणाभावात्। एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति

मन्यामहे। दृष्टविरुद्धमपि भवति किञ्चिद्वचनम्,—पात्रचयनं विधाय आह—स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति—इति प्रत्यक्षं शरीरकं व्यपदिशति, न च तत् स्वर्गं लोकं यातीति, प्रत्यक्षं हि तत् दह्यते, नचैष याति इति विधिशब्दः। एवं जातीयकं प्रमाणविरुद्धं वचनमप्रमाणम्। अम्बुनि मज्जन्ति अलाबूनि, ग्रावाणः प्लवन्ते—इति यथा। तत्सामान्यादग्निहोत्रादिचोदनासु अपि अनाश्वासः। तस्मान्न चोदनालक्षणोऽर्थो धर्म्मः।

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम् (८।२) तुशब्दः पक्षं व्यावर्त्तयति। अपौरुषेयः शब्दस्यार्थेन सम्बन्धः। तस्य अग्निहोत्रादिलक्षणस्यार्थस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य। तथा च चोदनालक्षणः सम्यक् सम्प्रत्ययः इति। पौरुषेये हि शब्दे यः प्रत्ययः, तस्य मिथ्याभाव आशङ्क्येत। परप्रत्ययो हि तदा स्यात्। अथ शब्दे ब्रुवति कथं मिथ्येति? नहि तदानीं अन्यतः पुरुषादवगतमिच्छामः। ब्रवीतीत्युच्यते—बोधयति बुद्ध्यमानस्य निमित्तं भवति इति शब्दे च निमित्ते स्वयं बुध्यते। कथं विप्रलब्धं ब्रूयात्?—नैतदेवं—इति, नचास्य चोदना स्याद्वा न वा इति—सांशयिकं प्रत्ययमुत्पादयति। नच मिथ्यैतत्—इति कालान्तरे देशान्तरेऽवस्थान्तरे पुरुषान्तरे वा पुनरव्यपदेश्यप्रत्ययो भवति? योऽन्यस्य प्रत्ययविपर्य्यासं दृष्ट्वा अत्रापि विपर्य्यसिष्यति—इत्यानुमानिकः प्रत्ययः

उत्पद्यते, सोऽप्यनेन प्रत्यक्षेण प्रत्ययेन विरुध्यमानो बाध्यते। तस्माच्चोदनालक्षण एव धर्मः।

स्यादेतदेवं, नैव शब्दस्यार्थेन सम्बन्धः, कुतोऽस्य पौरुषेयता अपौरुषेयता वेति। कथं?। स्याच्चेदर्थेन सम्बन्धः, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। यदि संश्लेषलक्षणं सम्बन्धमभिप्रेत्योच्यते। कार्यकारण-निमित्तनैमित्तिकाऽऽश्रयाश्रयिभाव—संयोगादयस्तु सम्बन्धाः शब्दस्यानुपपन्ना एवेति।

उच्यते। यो ह्यत्र व्यपदेश्यः सम्बन्धः, तमेकं न व्यपदिशति भवान्, प्रत्याय्यस्य, प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः इति। आह, यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययति?। उच्यते। सर्वत्र नो दर्शनं प्रमाणं, प्रत्यायकः—इति हि प्रत्ययं दृष्ट्वाऽवगच्छामः न प्रथमश्रुतः—इति प्रथमश्रवणे प्रत्ययमदृष्ट्वा, यावत्कृत्वःश्रुतेन इयं संज्ञा, अयं संज्ञी—इत्यवधारितं भवति, तावत्कृत्वःश्रुतादर्थावगम इति। यथा चक्षुः दृष्टृ, न वाह्येन प्रकाशेन विना प्रकाशयतीति अदृष्टृ न भवति।

यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि शब्दस्यार्थेन सम्बन्धः। कुतः? स्वभावतो ह्यसम्बन्धावेतौ शब्दार्थौ, मुखे हि शब्दमुपलभामहे भूमावर्थं, शब्दोऽयं न त्वर्थः, अर्थोऽयं न शब्दः'—इति च व्यपदिशन्ति, रूपभेदोऽपि भवति। गौः—इतीमं शब्दमुच्चारयन्ति, सास्नादिमन्तमर्थमवबुध्यन्ते इति। पृथग्भूतयोश्च यः सम्बन्धः, स कृतको दृष्टः, यथा रज्जुघटयोरिति।

अथ गौः—इत्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः। श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः, ते च श्रोत्रग्रहणाः। यद्येवं अर्थप्रत्ययो नोपपद्यते। कथं? एकैकाक्षरविज्ञानेऽर्थो नोपलभ्यते। नचाक्षरव्यतिरिक्तोऽन्यः कश्चिदस्ति समुदायो नाम। यतोऽर्थप्रतिपत्तिः स्यात्। यदा गकारः, न तदा औकारविसर्जनीयौ, यदौकारविसर्जनीयौ, न तदा गकारः। अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति, यतोऽर्थप्रतिपत्तिः स्यात्। अन्तर्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेत्। न, स्मृतेरपि क्षणिकत्वादक्षरैस्तुल्यता। पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः—इत्यदोषः। नन्वेवं शब्दादर्थं प्रतिपद्यामहे—इति लौकिकं वचनमनुपपन्नं स्यात्। उच्यते। यदि नोपपद्यते, अनुपपन्नं नाम। न हि लौकिकं वचनमनुपपन्नम्—इत्येतावता प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्योऽभ्युपगन्तुम्। लौकिकानि वचनान्युपपन्नार्थानि, अनुपपन्नार्थानि च दृश्यन्ते। यथा, देवदत्त! गामभ्याज—इत्येवमादीनि, दश दाड़िमानि षट् अपूपाः, इत्येवमादीनि च।

ननु च शास्त्रकारा अप्येवमाहुः, पूर्वापरीभूतं भावमाख्यातेनाचष्टे, व्रजति, पचति—इत्युपक्रमप्रभृति अपवर्गपर्यन्तमिति यथा। न, शास्त्रकारवचनमपि अलं इममर्थमप्रमाणकमुपपादयितुम्।

अपिच नैव एतत् अनुपपन्नार्थम्। अक्षरेभ्यः संस्काराः,

संस्कारादर्थप्रतिपत्तिः—इति सम्भवति अर्थप्रतिपत्तौ अक्षराणि निमित्तम्। गौणः एवार्थप्रतिपत्तौ शब्दः इति चेत्। न गौणोऽक्षरेषु निमित्तभावः, तद्भावे भावात्, तदभावे चाऽभावात्।

अथापि गौणः स्यात्। न, गौणः शब्दो माभूत्—इति प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्यः परिकल्पयितुम्। न हि अग्निर्माणवकः—इत्युक्ते अग्निशब्दो गौणो मा भूत्—इति ज्वलन एव माणवकः,—इत्यध्यवसीयते। नच प्रत्यक्षो गकारादिभ्योऽन्यो गोशब्दः इति, भेददर्शनाभावात्, अभेददर्शनाच्च। गकारादीनि हि प्रत्यक्षाणि। तस्मात् गौः—इति गकारादिविसर्जनीयान्तं पदं अक्षराण्येव। अतो न तेभ्यो व्यतिरिक्तं अन्यत् पदं नामेति। ननु संस्कारकल्पनायामप्यदृष्टकल्पना। उच्यते। शब्दकल्पनायां सा च, शब्दकल्पना च। तस्मादक्षराण्येव पदम्।

अथ गौः—इत्यस्य शब्दस्य कोऽर्थः?। सास्नादिविशिष्टाकृतिः—इति ब्रूमः। ननु आकृतिः साध्याऽस्ति वा न वा इति?। न प्रत्यक्षा सती साध्या भवितुमर्हति; रुचकः, स्वस्तिको, वर्द्धमानकः—इति हि प्रत्यक्षं दृश्यते। व्यामोहः—इति चेत्। न। न असति प्रत्ययविपर्य्यासे, व्यामोहः—इति शक्यते वक्तुम्। असत्यप्यर्थान्तरे एवंजातीयको भवति प्रत्ययः। पङ्क्तिः, यूथं, वनम्—इति यथा, इति चेत्। न, असम्बद्धमिदं वचनमुपन्यस्तं। किं असति वने वनप्रत्ययो भवति इति?। प्रत्यक्षमेवाक्षिप्यते वृक्षा अपि न सन्ति इति। यद्येवं, प्रत्युक्तः स

माहाजानिकः पक्षः। अथ किमाकृतिसद्भाववादी उपालभ्यते, सिद्धान्तान्तरं ते दूष्यति इति वनेऽपि सति वनप्रत्ययः प्राप्नोति—इति। एवमपि, प्रकृतं दूषयितुमशक्नुवतस्तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते, असाधकत्वात्। स हि वक्ष्यति—दुष्यतु, यदि दुष्यति। किं तेन दुष्टेन, अदुष्टेन वा प्रकृतं त्वया साधितं भवति, मदीयो वा पक्षो दूषितो भवति? इति। न च वृक्षव्यतिरिक्तं वनं यस्मात् न उपलभ्यते, अतो वनं नास्ति इत्यवगम्यते। यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते, मिथ्यैव वनप्रत्ययः—इति। ततो वनं नास्ति इत्यवगच्छामः। न च गवादिषु प्रत्ययो विपर्य्येति। अतो वैषम्यम्। अथ वनादिषु नैव विपर्य्येति, न ते न सन्ति—इति। तस्मात् असम्बध्यः पंक्तिवनोपन्यासः। अत उपपन्नम् जैमिनिवचनम् आकृतिः शब्दार्थः इति। यथा च आकृतिः शब्दार्थः, तथोपरिष्टात् (१अ०। ३ पा०) निपुणतरमुपपादयिष्याम इति।

अथ सम्बन्धः कः? इति। यत्, शब्दे विज्ञातेऽर्थो विज्ञायते, स तु कृतक—इति पूर्वम् (१४। १८) उपपादितं तस्मात् मन्यामहे—केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्त्तुं वेदा प्रणीता इति। तदिदानीं उच्यते—अपौरुषेयत्वात् सम्बन्धस्य सिद्धम् इति। कथं पुनरिदमवगम्यते अपौरुषेयः एषः सम्बन्धः—इति? पुरुषस्य सम्बन्धुरभावात्। कथं सम्बन्धा नास्ति? प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम्। ननु

चिरवृत्तत्वात् प्रत्यक्षस्याविषयो भवेत् इदानीन्तनानाम्। न हि चिरवृत्तः सन् न स्मर्य्येत। न च हिमवदादिषु कूपारामादिवत् अस्मरणं भवितुमर्हति। पुरुषवियोगो हि तेषु भवति, देशोत्सादेन कुलोत्सादेन वा। न च शब्दार्थव्यवहारवियोगो पुरुषाणामस्ति। स्यादेतत्, सम्बन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्त्तृस्मरणमनाद्रियमाना विस्मरेयुः इति। तन्न। यदि हि पुरुषः कृत्वा सम्बन्धं व्यवहारयेत्, व्यवहारकाले अवश्यं स्मर्त्तव्यो भवति। सम्प्रतिपत्तौ हि कर्त्तृव्यवहर्त्त्रोरर्थः सिध्यति, न विप्रतिपत्तौ। नहि वृद्धिशब्देन अपाणिनेर्व्यवहारतः आदैचः प्रतीयेरन्, पाणिनिकृतिमननुमन्यमानस्य वा। तथा, मकारेण अपिङ्गलस्य न सर्वगुरुस्त्रिकः प्रतीयेत, पिङ्गलकृतिमननुमन्यमानस्य वा। तेन, कर्त्तृव्यवहर्त्तारौ सम्प्रतिपद्येते। तेन, वेदे व्यवहरद्भिरवश्यं स्मरणीयः सम्बन्धस्य कर्त्ता स्यात्, व्यवहारस्य च। न हि विस्मृते वृद्धिरादैच् (पाणि०१सू०) इत्यस्य सूत्रस्य कर्त्तरि, वृद्धिर्यस्याचामादिः (पा०१ अ०। १ पा०। ३२सू०) इति किञ्चित् प्रतीयेत।

तस्मात्कारणादवगच्छामः—न, कृत्वा सम्बन्धं व्यवहारार्थं केनचिद्वेदाः प्रणीताः—इति। यद्यपि च विस्मरणमुपपद्येत, तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि, यथा, विद्यमानस्याप्यनुपलम्भनं भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे। तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः इति। ननु अर्थापत्त्या

सम्बन्धारं प्रतिपद्येमहि, न ह्यकृतसम्बन्धाच्छब्दादर्थं प्रतिपद्यमानान् उपलभामहे। प्रतिपद्येरंश्चेत्, प्रथमश्रवणेऽपि प्रतिपद्येरन्। तदनुपलम्भनादवश्यं भवितव्यं सम्बन्धा इति चेत्? न, सिद्धवदुपदेशात्। यदि सम्बन्धुरभावात् नियमतो नार्थाः उपलभ्येरन्, ततोऽर्थापत्त्या सम्बन्धारमवगच्छामः। अस्ति तु अन्यः प्रकारः। वृद्धानां स्वार्थेन संव्यवहरमाणानां उपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते। तेऽपि वृद्धा यदा बाला आसन्, तदाऽन्येभ्यो वृद्धेभ्यः तेऽप्यन्येभ्यः—इति नास्त्यादिः—इत्येवं वा भवेत्, अथ वा। न कश्चिदेकोऽपि शब्दस्यार्थेन सम्बन्धः आसीत्, अथ केनचित् सम्बन्धाः प्रवर्त्तिताः—इति। अत्र वृद्धव्यवहारे सति नार्थादापद्येत सम्बन्धस्य कर्त्ता। अपि च व्यवहारवादिनः प्रत्यक्षमुपदिशन्ति, कल्पयन्ति इतरे सम्बन्धारं। नच, प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी। तस्मात् सम्बन्धुरभावः।

अव्यतिरेकश्च (८।४) यथा अस्मिन् देशे, सास्नादिमति गोशब्दः, एवं सर्वेषु दुर्गमेष्वपि। बहवः संबन्धारः कथं सङ्गंस्यन्ते? एको न शक्नुयात्, अतो नास्ति सम्बन्धस्य कर्त्ता। अपरः आह, अव्यतिरेकश्च, न हि, सम्बन्धव्यतिरिक्तः कश्चित्कालोऽस्ति। यस्मिन् न कश्चिदपि शब्दः केनचिदर्थेन सम्बद्ध आसीत्। कथं?। सम्बन्धक्रियैव हि नोपपद्यते,—अवश्यमनेन संबन्धं कुर्वता केनचिच्छब्देन कर्त्तव्यः। येन क्रियेत, तस्य तेन कृतः, अथान्येन केनचित्कृतः? तस्य केनेति तस्य केनेति? नैवावतिष्ठते।

तस्मादवश्यमनेन सम्बन्धं कुर्वता अकृतसम्बन्धाः केऽ
शब्दाः वृद्धव्यवहारसिद्धाः अभ्युपगन्तव्याः। अस्ति
व्यवहारसिद्धिः, न नियोगतः सम्बन्धा भविष्यमिति अ
पत्तिरपि नास्ति।

स्यादेतत्। अप्रसिद्धसम्बन्धाः बालाः कथं वृद्धे
प्रतिपद्यन्ते? इति नास्ति दृष्टेऽनुपपन्नं नाम। दृष्टा
बालाः वृद्धेभ्यः प्रतिपद्यमानाः। न च प्रतिपन्नसम्बन्ध
सम्बन्धस्य कर्त्तुः। तस्माद्वैषम्यम्।

अर्थेऽनुपलब्धे (८।४) अनुपलब्धे च देवदत्तादाव
ऽनर्थकं संज्ञाकरणं, अशक्यञ्च। विशेषान् प्रतिपत्तुं
संज्ञाः क्रियन्ते विशेषांश्चोद्दिश्य। तद्विशेषेष्वज्ञायमाने
उभयमप्यनवक्लृप्तम्। तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः
अतश्च तत् प्रमाणम् (८।४) अनपेक्षत्वात् (८।५
न च एवं सति पुरुषान्तरं प्रत्ययान्तरञ्च अपेक्ष्यते। तस्मा
चोदनालक्षणः एव धर्मो नान्यलक्षणः। बादरायणग्रहण
मुक्तम् (८।१८)।

अथ, यदुक्तं (१२।११) अनिमित्तं शब्दः कर्मकाले
फलादर्शनात् कालान्तरे च कर्माभावात्प्रमाणं नास्ति—
इति। तदुच्यते—न स्यात्प्रमाणं, यदि पञ्चैव प्रमाणान्य-
भविष्यन्। येन येन हि प्रमीयते, तत्तत्प्रमाणं, शब्देनापि
प्रमीयते। ततः शब्दोऽपि प्रमाणं, यथैव प्रत्यक्षम्। न च,
प्रमाणेनावगतं प्रमाणान्तरेणानवगतम्—इत्येतावता अन-
वगतं भवति। न चैवं श्रूयते—कृते कर्मणि तावत्येव फलं
भवति। किन्तु कर्मणः फलं प्राप्यते—इति, यच्च (१२।२१)

कालान्तरे फलस्याव्यत्प्रत्यचं कारणमस्ति—इति। नैष दोषः, तच्चैव हि तत्र कारणं शब्दश्चेति।

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं (१३। २) स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति—इति प्रत्यक्षं शरीरकं व्यपदिशति—इति। तदुच्यते, शरीरसम्बन्धात्, यस्य तच्छरीरं, सोऽपि तैर्यज्ञायुधैः यज्ञायुधी इत्युच्यते। आह—कोऽसावन्यो? नैनमुपलभामहे। प्राणादिभिरेनमुपलभामहे, योऽसौ प्राणिति, अपानिति, उच्छ्वसिति, निमिषति, इत्यादि चेष्टितवान्। सोऽत्र शरीरे यज्ञायुधी—इति। ननु शरीरमेव प्राणिति अपानिति च। न, प्राणादयः शरीरगुणविधर्माणोऽयावच्छरीरभावित्वात्, यावच्छरीरम्, तावदस्य गुणाः रूपादयः। प्राणादयस्तु सत्यपि शरीरे न भवन्ति। सुखादयश्च स्वयमुपलभ्यन्ते, न रूपादयः इव शरीरगुणाः परेणापीति। तस्माच्छरीरगुणवैधर्म्यादन्यः शरीरात् यज्ञायुधीति।

आह,—कुतः एषः सम्प्रत्ययः?—सुखादिभ्योऽन्यस्तद्वान् अस्तीति, न हि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे। तस्मात् शशविषाणवत् असौ नास्ति। अथोच्यते, तेन विना कस्य सुखादयः? इति। न कस्यचिदपि—इति वक्ष्यामः। न हि, यो यः उपलभ्यते, तस्य तस्य सम्बन्धिना भवितव्यम्। यस्य सम्बन्धोऽप्युपलभ्यते, सम्बन्धी च तस्यायं सम्बन्धी—इति गम्यते। न हि चन्द्रमसं, आदित्यं वा उपलभ्य सम्बन्धान्वेषणा भवति कस्यायं—इति। न कस्यचिदपि। इत्यवधार्य्यते। तस्मान्न सुखादिभ्योऽन्यः

तद्वान् अस्तीति। अथ उपलब्धस्यावश्यं कल्पयितव्यः सम्बन्धी भवति। ततः आत्मानमप्यनेन प्रकारेणोपलभ्य, कस्यायं?—इति सम्बन्ध्यन्तरमन्विष्वेम। तमपि कल्पयित्वा, अन्यमपि कल्पयित्वा, अन्यं—इत्यव्यवस्थैव स्यात्। अथ कञ्चित् कल्पयित्वा न सम्बन्ध्यन्तरमपि कल्पयिष्यसि, तावत्येव विरंस्यसि, तावता च परितोष्यसि। ततो विज्ञाने एव परितुष्य तावत्येव विरन्तुमर्हसि।

अत्रोच्यते। यदि विज्ञानादन्यो नास्ति, कस्तर्हि जानाति—इत्युच्यते? ज्ञानस्य कर्तुरभिधानमनेन शब्देनोपपद्यते। तदेषः शब्दोऽर्थवान् कर्त्तव्यः—इति ज्ञानाद् व्यतिरिक्तमात्मानं कल्पयिष्यामः इति।

आह, वेदाः एनं शब्दमर्थवन्तं कल्पयिष्यन्ति, यदि कल्पयितव्यं प्रमंस्यन्ते। बहवः खल्विह जनाः अस्ति आत्मा, अस्ति आत्मा इति—आत्मसत्तावादिनः एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति। तथापि नात्मसत्तां कल्पयितुं घटन्ते। किमङ्ग पुनः जानाति—इति—परोक्षशब्ददर्शनात्। तस्मात् असदेतत्।

उच्यते। इच्छया आत्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे हि अभिप्रेते भवतीच्छा, यथा, मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रति अस्माकं इच्छा भवति, नो खल्वन्येन पुरुषेणोपलब्धेऽपि विषयेऽन्यस्य उपलब्धुरिच्छा भवति। भवति च अन्येद्युरुपलब्धे अन्येद्युरिच्छा। तेन उपलम्भनेन समानकर्तृका सा—इत्यवगच्छामः। यदि विज्ञानमात्रमे-

वेदमुपलम्भकम् अभविष्यत्, प्रत्यस्ते तस्मिन् कस्यापरेद्यु-रिच्छा अभविष्यत्?। अथ नु विज्ञानादन्यो विज्ञाता नित्यः, ततः एकस्मिन्नहनि य एव उपलब्धा, परेद्युरपि स एवैषिष्यतीति। इतरथा ह्यीच्छा नोपपन्ना स्यात्।

अत्रोच्यते—अनुपपन्नमिति नः क्व सम्प्रत्ययः?। यन्न प्रमाणेनावगतम्। विज्ञानात्तावदन्यं नोपलभामहे, यन्नोप-लभामहे, तत् शशविषाणवदेव नास्ति इत्यवगच्छामः। न च तस्मिन्नसति विज्ञानसद्भावोऽनुपपन्नः, प्रत्यक्षावगत-त्वादेव। क्षणिकत्वं च अस्य प्रत्यक्षपूर्वकमेव। न च, ज्ञातरि विज्ञानादन्यस्मिन् असति ज्ञाने चानित्ये, अपरेद्युरिच्छा अनुपपन्ना। प्रत्यक्षावगतत्वादेव। नो खल्वप्येतत् दृष्टं य एवान्येद्युरुपलब्धा स एवान्येद्युरेषिता—इति। इदं तु दृष्टं यत् क्वचित् अन्येन दृष्टमन्यः इच्छति क्वचिन्न, समानायां सन्ततावन्य इच्छति सन्तत्यन्तरेणेच्छतीति। तस्मात् न सुखादिव्यतिरिक्तोऽन्योऽस्तीति। अत्रोच्यते न हि असत्तार इच्छन्ति इत्युपपद्यते। न वा अदृष्टपूर्वे स्मृतिर्भवति। तस्मात् क्षणिक-विज्ञानस्कन्धमात्रे स्मृति-रनुपपन्नेति।

अत्राह, स्मृतिरपि इच्छावत् पूर्वज्ञानसदृशं विज्ञानं पूर्वविज्ञानविषयं वा स्मृतिः, इत्युच्यते। तच्च द्रष्टरि विनष्टेऽपि अपरेद्युरुत्पद्यमानं नानुपपन्नं, प्रत्यक्षावगतत्वा-देव। अन्यस्मिन् स्कन्धघनेऽन्येन स्कन्धघनेन यत् ज्ञानम्, तत्सन्ततिजेनान्येनोपलभ्यते, नातत्सन्ततिजेनान्येन। तस्मा-च्छून्याः स्कन्धघनाः इति। अथास्मिन्नर्थे (बृ० उ० ६ अ।

५ ब्रा० ) ब्राह्मणं भवति, विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति इति ।

उच्यते नैतदेवं । अन्येद्युर्दृष्टेऽपरेद्युः अहमिदमदर्शं इति भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति, न परत्र, अपरोह्यसौ अन्येद्युर्दृष्टवान् । तस्मात् तद्व्यतिरिक्तोऽन्योऽस्ति, यत्रायं अहं---शब्दः ।

आह---परत्राप्यहं शब्दो भक्त्या दृश्यते । यथा अहमेव पुत्रः, अहमेव देवदत्तः, अहमेव गच्छामि इति । अत्रोच्यते, न वयं अहं--इतीमं शब्दं प्रयुज्यमानमन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः । किं तर्हि शब्दाद्व्यतिरिक्तं प्रत्ययं प्रतीमो वयं इममर्थं वयमेवान्येद्युरुपलभामहे, वयमेवाद्य स्मरामः, तस्माद्वयमिममर्थमवगच्छामः,---वयमेव ह्यः, वयमेवाद्य इति । ये ह्यः, अद्य च न ते विनष्टाः । अथाप्यस्मिन्नर्थे ब्राह्मणं भवति,—(वृ०उ० ४अ० । ५ब्रा० ) स वा अयमात्मा—इति प्रकृत्य. आमनन्ति अशीर्य्यो न हि शीर्य्यते इति, तथा (वृ० उ० । ६ अ० । ब्रा० ५ ।) अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्म्मा इति । विनश्वरं च विज्ञानम् । तस्माद्विनश्वरादन्यः स इत्यवगच्छामः । न च शक्यमेवमवगन्तुं—यथोपलभ्यन्ते अर्थाः, न तथा भवन्तीति, यथा तु खलु नोपलभ्यन्ते, तथा भवन्तीति । तथा हि सति, शशो नास्ति, शशस्य विषाणमस्तीत्यवगम्येत । नच अहंप्रत्ययो व्यामोहः—इति शक्यते वक्तुं, बाधकप्रत्ययाभावात् । तस्मात् सुखादिभ्यः व्यतिरिक्तोऽस्ति । एवञ्चेत्, स एव यज्ञायुधी—इति व्यपदिश्यते ।

आह—यदि विज्ञानादन्यदस्ति विज्ञात्, विज्ञानमपास्य तन्निदर्श्यतां,—इदं तत्, ईदृशं च—इति, न च तत् निदृश्यते। तस्मान्न ततोऽन्यदस्ति इति। अत्रोच्यते, स्वसंवेद्यः स भवति, नासावन्येन शक्यते द्रष्टुं, कथमसौ निदर्श्येत ? इति। यथा च, कश्चित् चक्षुष्मान् स्वयं रूपं पश्यति, न च शक्नोत्यन्यस्मै जात्यन्धाय तत् निदर्शयितुम्। न च, तत् न शक्यते निदर्शयितुं—इत्येतावता नास्ति—इत्यवगम्यते। एवमसौ पुरुषः स्वयमात्मानमुपलभते, न चान्यस्मै शक्नोति दर्शयितुं अन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात्। सोऽप्यन्यः पुरुषः स्वयमात्मानमुपलभते, न च परमात्मानम्। तेन सर्वे स्वेन स्वेनात्मना आत्मानमुपलभमानाः सन्त्येव, यद्यपि परपुरुषं नोपलभन्ते इति। अथास्मिन्नर्थे ब्राह्मणः (बृ० उ० ६ अ०। ३ ब्रा०) भवति,—शान्तायां वाचि किं ? ज्योति-रेवायं पुरुषः आत्मज्योतिः सम्राड़िति होवाच इति। परेण नोपलभ्यते—इत्यत्रापि ब्राह्मणं (बृ० उ० ५ अ०। ८ ब्रा०) भवति,—अगृह्यो नहि गृह्यते इति। परेण न गृह्यते—इत्येतदभिप्रायमेतत्। कुतः ? स्वयं ज्योतिष्ट्ववचनात्। अथापि ब्राह्मणं (बृ०उ० ६ अ०। ब्रा० ७) भवति, अत्रायं पुरुषः स्वयंज्योतिर्भवति इति। केन पुनरुपायेनायमन्यस्मै कथ्यते—इति ?। तत्राप्युपाये ब्राह्मणं (बृ० उ० ६ अ० ३ ब्रा०) भवति, स एष न इति, न—इति आत्मेति होवाच इति। असौ एवंरूपः—इति न शक्यते निर्दर्शयितुम्।

५ ब्रा० ) ब्राह्मणं भवति, विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति इति ।

उच्यते, नैतदेवं । अन्येद्युर्दृष्टेऽपरेद्युः अहमिदमदर्शं इति भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति, न परत्र, अपरोक्षसौ अन्येद्युर्दृष्टवान् । तस्मात् तद्व्यतिरिक्तोऽन्योऽस्ति, यत्रायं अहं--शब्दः ।

आह--परत्राप्यहं शब्दो भक्त्या दृश्यते । यथा अहमेव पुत्रः, अहमेव देवदत्तः, अहमेव गच्छामि इति । अत्रोच्यते, न वयं अहं--इतीमं शब्दं प्रयुज्यमानमन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः । किं तर्हि शब्दाद्व्यतिरिक्तं प्रत्ययं प्रतीमो वयं, इममर्थं वयमेवान्येद्युरुपलभामहे, वयमेवाद्य स्मरामः, तस्माद्वयमिममर्थमवगच्छामः,---वयमेव ह्यः, वयमेवाद्य इति । ये ह्यः, अद्य च न ते विनष्टाः । अथाप्यस्मिन्नर्थे ब्राह्मणं भवति,—(वृ०उ० ४अ० । ५ब्रा० ) स वा अयमात्मा—इति प्रकृत्य, आमनन्ति, अशीर्य्यो न हि शीर्य्यते इति, तथा (वृ० उ० । ६ अ० । ब्रा० ५ ।) अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्म्मा इति । विनश्वरं च विज्ञानम् । तस्माद्विनश्वरादन्यः स इत्यवगच्छामः । न च शक्यमेवमवगन्तुं—यथोपलभ्यन्ते अर्थाः, न तथा भवन्तीति, यथा तु खलु नोपलभ्यन्ते, तथा भवन्तीति । तथा हि सति, शशो नास्ति, शशस्य विषाणमस्तीत्यवगम्येत । नच अहंप्रत्ययो व्यामोहः—इति शक्यते वक्तुं, बाधकप्रत्ययाभावात् । तस्मात् सुखादिभ्यः व्यतिरिक्तोऽस्ति । एवञ्चेत्, स एव यज्ञायुधी—इति व्यपदिश्यते ।

आह—यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निदर्श्यतां,—इदं तत्, ईदृशं च—इति, न च तत् निदर्श्यते। तस्मान्न ततोऽन्यदस्ति इति। अत्रोच्यते, स्वसंवेद्यः स भवति, नासावन्येन शक्यते द्रष्टुं, कथमसौ निदर्श्येत ? इति। यथा च, कश्चित् चक्षुष्मान् स्वयं रूपं पश्यति, न च शक्नोत्यन्यस्मै जात्यन्धाय तत् निदर्शयितुम्। न च, तत् न शक्यते निदर्शयितुं—इत्येतावता नास्ति—इत्यवगम्यते। एवमसौ पुरुषः स्वयमात्मानमुपलभते, न चान्यस्मै शक्नोति दर्शयितुं अन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात्। सोऽप्यन्यः पुरुषः स्वयमात्मानमुपलभते, न च परमात्मानम्। तेन सर्वे स्वेन स्वेनात्मना आत्मानमुपलभमानाः सन्त्येव, यद्यपि परपुरुषं नोपलभन्ते इति। अथास्मिन्नर्थे ब्राह्मणः (बृ० उ० ६ अ०। ३ ब्रा०) भवति,—शान्तायां वाचि किं ? ज्योति-रेवायं पुरुषः आत्मज्योतिः सम्राड़िति होवाच इति। परेण नोपलभ्यते—इत्यत्रापि ब्राह्मणं (बृ० उ० ५ अ०। ८ ब्रा०) भवति,—अगृह्यो नहि गृह्यते इति। परेण न गृह्यते—इत्येतदभिप्रायमेतत्। कुतः ? स्वयं ज्योतिष्ट्ववचनात्। अथापि ब्राह्मणं (बृ०उ० ६ अ०। ब्रा० ७) भवति, अत्रायं पुरुषः स्वयंज्योतिर्भवति इति। केन पुनरुपायेनायमन्यस्मै काथ्यते—इति ?। तत्राप्युपाये ब्राह्मणं (बृ० उ० ६ अ० ३ ब्रा०) भवति, स एष न इति, न—इति आत्मेति होवाच इति। असौ एवंरूपः—इति न शक्यते निर्दर्शयितुम्।

यच्च परः पश्यति, तत्प्रतिषेधस्तस्य उपदेशोपायः, शरीरं परः पश्यति, तेनात्मा उपदिश्यते,—शरीरं नात्मा, आत्मा शरीरादन्यः इति, स चात्मा—इति—शरीरप्रतिषेधेनोपदिश्यते। तथा प्राणादयो नात्मानः, तत्प्रतिषेधेन तेभ्योऽन्यः उपदिश्यते। तथा परस्याः सुखादयः परेण लिङ्गैरुपलभ्यन्ते, तेऽपि नात्मानः—इति—तत्प्रतिषेधेनान्यः उपदिश्यते। यः स्वयं पश्यति, न ततोऽन्यः पुरुषः,—इत्येतदपि पुरुषप्रवृत्त्याऽनुमीयते,—यदाऽसौ पुरुषः पूर्वेद्युः साभिलषितानामर्थानां प्रतिसमाधाने शेषानुष्ठाने च यतते, अतः प्रवृत्त्याऽवगम्यते—नूनमसावनित्यान् नित्यमवगच्छति इति।

उपमानाच्चोपदिश्यते, यादृशं भवान् स्वयमात्मानं पश्यति, अनेनोपमानेनावगच्छ—अहमपि तादृशमेव पश्यामि—इति। यथा कश्चिदात्मीयां वेदनां परस्मै आचक्षीत,—दह्यमानस्येव मे भवति, पात्यमानस्येव मे भवति, रुद्रमानस्येव मे भवति—इति। अतः स्वयमवगम्यमानत्वादस्ति तद्व्यतिरिक्तः पुरुषः इति।

यदुच्यते—विज्ञानमपास्य तत् निदर्श्यताम् (२५। १) इति। यद्युपायमेव निषेधसि, न शक्यमुपायमन्तरेणोपेयमुपेतुम्। अयमेवाभ्युपायो ज्ञातव्यानामर्थानां—यो यथा ज्ञायते स तथा इति। तद्यथा, कः शुक्लो नाम? यत्र शुक्लत्वमस्ति। किं शुक्लत्वं नाम? यत्र शुक्लशब्दप्रवृत्तिः। क्व तस्य प्रवृत्तिः? यच्छुक्लशब्दे उच्चरिते प्रतीयते। तस्मान्न विज्ञानं प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं

शक्यम्। न च, नियोगतः प्रत्यये प्रतीते प्रत्ययार्थः प्रतीतो भवति। अप्रतीतेऽपि हि प्रत्यये सति अथ प्रतीयते एव। न हि, विज्ञानं प्रत्यक्षम्। विज्ञेयोऽर्थः प्रत्यक्ष इति। एतत् पूर्वमेवोक्तम् (१०।२३)। तदवश्यकर्त्तव्येऽपह्नवे कामं विज्ञानमपह्नुयेत। नार्थाः इत्येतदुक्तमेव (११।१३) तस्मा-दस्ति सुखादिभ्योऽन्यो नित्यः पुरुषः इति।

अथ यदुक्तं (२४।१) विज्ञानघन, एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति—इति। अत्रोच्यते। अत्रैव मा भगवान् मोहान्तमपीपदत् इति—परिचोदनोत्तरकाले अपह्नुत्य मोहाभिप्रायमस्य वर्णित-वान्—न वा अरे मोहं ब्रवीमि, अविनाशी वा अरेऽयमा-त्माऽनुच्छित्तिधर्मा, मात्रासंसर्गस्त्वस्य भवति (बृ० उ० ६ अ। ५ ब्रा०) इति तस्मान्न विज्ञानमात्रम्। तस्माद्वैषम्यम् यदुक्तं (१३।५) नचैष याति—इति विधिशब्दः, इति। मा भूद्विधिशब्दः, स्वर्गकामो यजेत इति वचनान्तरेणाव-गतमनुवदिष्यते। तस्मादविरोधः।

शब्दस्य नित्यताधिकरणम्।

## सू. कर्मैके तत्र दर्शनात्॥ ६॥ (पू० १)

उक्तं (८।४) नित्यः शब्दार्थयोः सम्बन्धः इति। तदनुपपन्नं, शब्दस्यानित्यत्वात्, विनष्टः शब्दः, पुनरस्य क्रियमाणस्यार्थेन अकृतकः सम्बन्धो नोपपद्यते। न हि प्रथमश्रुताच्छब्दात् कश्चिदर्थं प्रत्येति। कथं पुनरनित्यः शब्दः? प्रयत्नादुत्तरकालं दृश्यते यतः। अतः प्रयत्नानन्त-र्यात् तेन क्रियते—इति गम्यते। ननु अभिव्यञ्जनात् स

एनम् । नेति ब्रूमः । नहि अस्य प्राक् अभिव्यञ्जनात् सद्भावे किञ्चन प्रमाणमस्ति । सन् च अभिव्यज्यते, नासन् ।

सू. अस्थानात् ॥ ७ ॥ (पू० २)

नो खल्वप्युच्चरितं मुहूर्त्तमप्युपलभामहे । अतो विनष्टः —इत्यवगच्छामः । न च, सन् उपलभ्यते । अनुपलम्भकारणानां व्यवधानादीनामभावेऽप्यनुपलम्भनात् । न च, असौ विषयमप्राप्तः, आकाशविषयत्वात् । कर्णच्छिद्रेऽप्यनुपलम्भनात् ।

सू. करोतिशब्दात् ॥ ८ ॥ (पू०३)

अपि च शब्दं कुरु, मा शब्दं कार्षीः—इति—व्यवहर्त्तारः प्रयुञ्जन्ते, न ते नूनमवगच्छन्ति—स एवायं शब्दः —इति ।

सत्वान्तरे च यौगपद्यात् ॥ ९ ॥ (पू०४)

नानादेशेषु च युगपच्छब्दमुपलभामहे, तदेकस्य नित्यस्यानुपपन्नमिति । असति विशेषे नित्यस्य न अनेकत्वम् । कार्य्याणान्तु बहूनां नानादेशेषु क्रियमाणानामुपपद्यतेऽनेकदेशसम्बन्धः, तस्मादप्यनित्यः ।

सू. प्रकृतिविकृत्योश्च ॥ १० ॥ (पू०५)

अपि च दध्यत्र—इत्यत्र इकारः प्रकृतिः, यकारो विकृतिः—इत्युपदिशन्ति । यद्विक्रियते, तदनित्यम् । इकारसादृश्यञ्च यकारस्योपलभ्यते, तेनापि तयोः प्रकृतिविकारभावो लक्ष्यते ।

सू.　वृद्धिश्च कर्त्तृभूम्नाऽस्य ॥ ११ ॥ (पू०६)

अपि च, बहुभिरुच्चारयद्भिर्महान् शब्दः श्रूयते । स यदि अभिव्यज्यते, बहुभिरल्पैश्चोच्चार्य्यमाणस्तावानेवोपलभ्येत । अतो मन्यामहे,—नूनमस्य एकैकेन कश्चिदवयवः क्रियते, यत् प्रचयादयं महान् उपलभ्यते ।

सू.　समन्तु तत्र दर्शनम् ॥ १२ ॥ (उ० १)

भा० । तुशब्दात्पक्षो विपरिवर्त्तते । यदुक्तं (पू० १) प्रयत्नादुत्तरकाले दर्शनात् कृतकोऽयं—इति । यदि विस्पष्टेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः । ततो नित्यप्रत्ययसामर्थ्यात् प्रयत्नेनाभिव्यज्यते—इति भविष्यति । यदि प्रागुच्चारणादनभिव्यक्तः प्रयत्नेनाभिव्यज्यते । तस्मादुभयोः पक्षयोः सममेतत् ।

सू. सतः परम् अदर्शनं विषयानागमात् ॥१३ ॥ (उ० २)

भा० । यदपरं कारणमुक्तं (पू० २) उच्चरितप्रध्वस्तः—इति अत्रापि यदि शक्ष्यामो नित्यतामस्य विस्पष्टं वक्तुं, ततो नित्यप्रत्ययसामर्थ्यात् कदाचिदुपलब्धं कदाचिदनुपलब्धं दृष्ट्वा किञ्चिदुपलम्भस्य निमित्तं कल्पयिष्यामः । तच्च संयोगविभागसद्भावे सति भवतीति संयोगविभागावेवाभिव्यञ्जकौ—इति वक्ष्यामः । उपरतयोः संयोगविभागयोः श्रूयते इति चेत् । नैतदेवम् । न नूनमुपरमन्ति संयोगविभागाः, यतः उपलभ्यते शब्दः—इति, न हि ते प्रत्यक्षाः इति ।

यदि शब्दं संयोगविभागाः एवाभिव्यञ्जन्ति, न कुर्वन्ति। आकाशविषयत्वाच्छब्दस्य, आकाशस्यैकत्वात्, यः एवायमत्र श्रोत्राकाशः,स एव देशान्तरेष्वपीति स्रुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत। यस्य पुनः कुर्वन्ति, तस्य वायवीयाः संयोगविभागाः वाय्वाश्रितत्वा-द्वायुष्वेव करिष्यन्ति। यथा, तन्तवः तन्तुष्वेव पटं, तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः, स्रुघ्नस्थत्वात्तेषाम्। यस्याप्य-भिव्यञ्जन्ति, तस्याप्येष न दोषः, दूरे सत्याः कर्णशष्कुल्याः अनुपकारकाः संयोगविभागाः, तेन दूरे यच्छ्रोत्रं, तेन नोपलभ्यते इति। नैतदेवम्। अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युः। सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुप-लभेयाताम्। न च युगपदुपलभेते। तस्मान्नाप्राप्ताः उप-कुर्वन्ति। न चेदुपकुर्वन्ति तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागौ इति।

नैतदेवं, अभिघातेन हि प्रेरिताः वायवस्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभा-गान् उत्पादयन्ति, यावद्वेगमभिप्रतिष्ठन्ते। ते च वायो-रप्रत्यक्षत्वात् संयोगविभागाः नोपलभ्यन्ते। अनुपरते-ष्वेव तेषु शब्दः उपलभ्यते, नोपरतेषु। अतो न दोषः। अत एव चानुवातं दूरादुपलभ्यते शब्दः।

सू. प्रयोगस्य परम् ॥ १४ ॥ (उ० ३)

यदपरं कारणमुक्तं—( पू० ३ ) शब्दं कुरु, मा कार्षीः —इति व्यवहर्तारः प्रयुञ्जन्ते। तद्यसंशयं नित्यः शब्दः,

शब्दप्रयोगं कुर्विति भविष्यति। यथा गोमयात् कुर्विति संहारे।

सू. आदित्यवद्यौगपद्यम् ॥१५॥ (उ० ४)

यत्तु (पू० ४।) एकदेशस्य सतो नानादेशेषु युगपद् दर्शनमनुपपन्नम्—इति। आदित्यं पश्य देवानां प्रिय एकः सन् अनेकदेशावस्थित इव लक्ष्यते। कथं पुनरवगम्यते एकः आदित्यः—इति? उच्यते, प्राङ्मुखो देवदत्तः पूर्वाह्णे सम्प्रति पुरस्तादादित्यं पश्यति। तस्य दक्षिणतोऽवस्थितो न द्वौ पश्यति, आत्मनश्च सम्प्रति न तिरश्चीनं देवदत्तस्यार्जवे। तस्मादेक आदित्य इति। दूरत्वादस्य देशो नावधार्य्यते। अतो व्यामोहः। एवं शब्देऽपि व्यामोहादनवधारणं देशस्य। यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात्, तथापि तावदनेकदेशता कदाचिदवगम्येत, न च, तत् संयोगदेशमागच्छति। प्रत्यक्षा हि कर्णशष्कुली तद्देशा गृह्यते। वायवीयाः पुनः संयोगविभागाः अप्रत्यक्षस्य वायोः, कर्णशष्कुलीप्रदेशे प्रादुर्भवन्तो नोपलभ्यन्ते—इति नानुपपन्नम्। अत एव व्यामोहः,—यत्, नानादेशेषु शब्दः इति। आकाशदेशश्च शब्दः इति, एकं च पुनराकाशं, अतोऽपि न नानादेशेषु। अपि च एकरूप्ये सति देशभेदेन कामं देशा एव भिन्नाः। न तु शब्दः। तस्मादयमप्यदोषः।

सू. वर्णान्तरमविकारः ॥१६॥ (उ० ५)

भा०। न च दध्यत्र—इत्यत्र प्रकृतिविकारभावः

(पू०५) शब्दान्तरं इकारात् यकारः। न हि, यकारं प्रयुञ्जाना इकारमुपाददते। यथा, कटं चिकीर्षन्तो वीरणानि। न च, सादृश्यमात्रं दृष्ट्वा प्रकृतिः, विकृतिर्वा उच्यते। न हि, दधिपिटकं दृष्ट्वा कुन्दपिटकं च, प्रकृतिविकारभावोऽवगम्यते। तस्मादयमप्यदोषः।

सू. नादवृद्धिपरा ॥ १७ ॥ (उ० ६)

यच्चैतत्, बहुभिर्भेरीमाध्मनद्भिः शब्दमुच्चारयद्भिर्महान् शब्द उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते (पू० ६)। नैवम्। निरवयवो हि शब्दः, अवयवभेदानवगमात्, निरवयवत्वाच्च महत्त्वानुपपत्तिः,—अतो न वर्द्धते शब्दः। मृदुरेकेन, बहुभिश्चोच्चार्यमाणे तान्येवाक्षराणि कर्णशष्कुलीमण्डलस्य सर्वां नेमिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्तर्येण अनेकशो ग्रहणात् महान् इव, अवयवान् इवोपलभ्यन्ते। संयोगविभागाः नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जन्तो नादशब्दवाच्याः। तेन नादस्यैषा वृद्धिः, न शब्दस्येति।

सू. नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

(सि०)

नित्यः शब्दो भवितुमर्हति। कुतः? दर्शनस्य परार्थत्वात् दर्शनमुच्चारणं, तत्परार्थं, परं अर्थं प्रत्याययितुं, उच्चरितमात्रे हि विनष्टे शब्दे न चाऽन्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात्। अतः न परार्थमुच्चार्येत। अथ न विनष्टः, ततो बहुशः उपलब्धत्वादर्थावगमः—इति

युक्तम्। अर्थवत्त्वात्दृश्यादर्थावगमः इति चेत्? न कश्चि-दर्थवान्, सर्वेषां नवत्वात्। कस्यचित् पूर्वस्य कृत्रिमः सम्बन्धो भविष्यति इति चेत्। तदुक्तं सदृशः इति चावगते व्यामोहात् प्रत्ययो व्यावर्त्तेत। मालाशब्दात् मालाप्रत्ययः इव। यथा गावीशब्दात् सास्नादिमति प्रत्ययस्यानिवृत्तिः, तद्वद्भविष्यति इति चेत्। न हि, गोशब्दं तत्रोच्चारयितु-मिच्छा। नेहान्यशब्दोच्चिचारयिषा। न चैकेनोच्चारणा-यत्नेन संव्यवहारस्यार्थसम्बन्धस्य शक्यते कर्त्तुम्। तस्मा-दर्शनस्य परार्थत्वात् नित्यः शब्दः।

सू. सर्वत्र यौगपद्यात्॥ १९॥ (हे॰१)

गोशब्दे उच्चरिते सर्वगवीषु युगपत् प्रत्ययो भवति। अतः आकृतिवचनोऽयम्। न चाकृत्या शब्दस्य सम्बन्धः शक्यते कर्तुं, निर्दिश्य हि आकृतिं कर्त्ता संबध्नीयात्। गोपिण्डे च बहूनामाकृतीनां सद्भावाच्छब्दमन्तरेण गोशब्द-वाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति? नित्ये तु सति गोशब्दे बहुकृत्वः उच्चरितः श्रुतपूर्वश्चान्यासु गोव्यक्तिषु अन्वयव्यतिरेकाभ्यामाकृतिवचनमवगमयिष्यति। तस्मा-दपि नित्यः।

सू. संख्याभावात्॥ २०॥ (हे॰२)

अष्टकृत्वो गोशब्द उच्चरितः इति वदन्ति, नाष्टौ गो-शब्दाः इति। किमतः? यद्येवम्। अनेन वचनेनाव-गम्यते,—प्रत्यभिजानन्तीति। वयं तावत् प्रत्यभिजानीमो न नः करणदौर्बल्यं एवमन्येऽपि प्रत्यभिजानन्ति—स एव

अयमिति। प्रत्यभिजानाना वयमिवान्येऽपि नान्यः— इति वक्तुमर्हन्ति। अथ मतं, अन्यत्वे सति सादृश्येन व्यामूढ़ाः सः—इति वक्ष्यन्ति। तन्न, न हि ते सदृशः— इति प्रतियन्ति, किं तर्हि, स एवायं इति। विदिते च स्फुटेऽन्यत्वे, व्यामोहः—इति गम्यते। न च, अयमन्यः इति प्रत्यक्षम्, अन्यद्वा प्रमाणमस्ति।

स्यादेतत् बुद्धिकर्म्मणी अपि ते प्रत्यभिज्ञायेते, ते अपि नित्ये प्राप्नुतः। नैष दोषः। न हि ते प्रत्यक्षे, अथ प्रत्यक्षे नित्ये एव। ह्यस्तनस्य शब्दस्य विनाशात् अन्योऽद्यतनः—इति चेत्। नैष विनष्टः, यतः एनं पुनरुपलभामहे। न हि, प्रत्यक्षदृष्टं मुहूर्त्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति। परिकल्पयन्तो द्वितीयसन्दर्शने मातरि, जायायां, पितरि वा नाश्वस्युः। न हि अनुपलम्भमात्रेण नास्ति—इति अवगम्य, नष्टः— इत्येव कल्पयन्ति। अप्रमाणतायां विदितायां नास्ति इत्यवगच्छामः। न हि, प्रमाणे प्रत्यक्षे सति, अप्रमाणता स्यात्। अस्तीति पुनः अव्यामोहेनावगम्यमाने न क्वचिदप्यभावः, न चासिद्धेऽभावे व्यामोहः, न च सिद्धोऽभावः। तस्मादसति व्यामोहे, नाभावः। तदेतदानुपूर्व्यां सिद्धम्। तस्मात् पुरस्तादनुच्चारितम् अनुपलभमाना अपि न विनष्टः इत्यवगन्तुमर्हन्ति। यथा, गृहान्निर्गताः सर्वगृहजनमपश्यन्तः पुनः प्रविश्य उपलभमाना अपि न प्राक् प्रवेशात् विनष्टः इत्यवगच्छन्ति, तद्वत् एनमपि न अन्यः इति वक्तुमर्हन्ति। योऽपि सर्वेषां भावानां प्रतिक्षणं विनाशम-

भ्युपगच्छन्ति, तेऽपि न शक्नुवन्ति शब्दस्य वदितुं, अन्ते हि चयदर्शनात् ते मन्यन्ते, न च शब्दस्यान्तः, न च चयो लक्ष्यते । सः इति प्रत्यक्षः प्रत्ययः, सदृशः इत्यानुमानिकः, न च, प्रत्यक्षविरुद्धम् अनुमानमुदेति, स्वकार्यं वा साधयति । तस्मान्नित्यः ।

सू. अनपेक्षत्वात् ॥ २१ ॥ (हे० ३)

येषामनवगतोत्पत्तीनां द्रव्याणां भाव एव लक्ष्यते, तेषामपि केषाञ्चिदनित्यता गम्यते, येषां विनाशकारणमुपलभ्यते । यथा, अभिनवं पटं दृष्ट्वा । न चैनं क्रियमाणमुपलब्धवान् । अथ वा अनित्यत्वमवगच्छति रूपमेव दृष्ट्वा,—तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनश्यति—इत्यवगच्छति । नैवं शब्दस्य किञ्चित्कारणमवगम्यते । यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते ।

सू. प्रख्याभावाच्च योगस्य ॥२२॥ (हे० ४)

इदं परेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । ननु वायुकारणकः स्यादिति, वायुरुन्नतः संयोगविभागैः शब्दो भवतीति, तथा च शिक्षाकाराः आहुः वायुरापद्यते शब्दतां इति । नैतदेवं वायवीयश्चेच्छब्दो भवेत् वायोः सन्निवेशविशेषः स्यात् । न च, वायवीयान् अवयवान् शब्दे सतः प्रत्यभिजानीमः । यथा, पटस्य तन्तुमयान् । नचैवं भवति । स्याच्चेदेवं स्पर्शनेनोपलभेमहि । न च, वायवीयानवयवान् शब्दगतान् स्पृशामः । तस्मान्न वायुकारणकः । अतो नित्यः ।

सू. लिङ्गदर्शनाच्च ॥ २३ ॥ (हि० ५)

लिङ्गं चैवं भवति, वाचा विरूपनित्यया इति, अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति। तस्मान्नित्यः शब्दः।

वेदस्य अर्थप्रत्यायकताधिकरणम्।

सू. उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात्

॥ २४ ॥ (पू०)

यद्यप्यौत्पत्तिकः नित्यः शब्दोऽर्थसम्बन्धश्च, तथापि न चोदनालक्षणो धर्मः, चोदना हि वाक्यं, न हि, अग्निहोत्रं जुहुयात् स्वर्गकामः इत्यतो वाक्यादन्यतमस्मात् पदात् अग्निहोत्रात् स्वर्गो भवति, इति गम्यते। गम्यते तु पदत्रये उच्चरिते। न चात्र चतुर्थः। शब्दोऽस्ति अन्यत्, अतः पदत्रयसमुदायात् न चायं समुदायोऽस्ति लोके। यतोऽस्य व्यवहारादर्थोऽवगम्यते। पदानि अमूनि प्रयुक्तानि, तेषां नित्योऽर्थः, अप्रयुक्तश्च समुदायः। तस्मात् समुदायस्यार्थः कृत्रिमो व्यामोहो वा। न च, पदार्था एव वाक्यार्थः, सामान्ये हि पदं प्रवर्त्तते, विशेषे वाक्यम्। अन्यच्च सामान्यं, अन्यो विशेषः। न च, पदार्थाद्वाक्यार्थावगतिः, असम्बन्धात्। असति चेत् सम्बन्धे, कस्मिंश्चित्पदार्थेऽवगतेऽर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात्। न चैतदेवं भवति। तस्मादन्यो वाक्यार्थः।

स्यादेतत्, अप्रयुक्तादपि वाक्यादसति सम्बन्धे स्वभावादर्थाव[illegible]ः इति। यदि कल्प्येत शब्दो धर्मप्रमा-

त्मोयं व्युत्क्रामेत् । नचैषः शब्दधर्मः, यत्, अप्रयुक्तादपि शब्दादर्थः प्रतीयते । न हि, प्रथमश्रुतात् कुतश्चिच्छब्दात् केचिदर्थं प्रतियन्ति । तदभिधीयते पदधर्मोऽयं न वाक्यधर्मः । वाक्याद्धि प्रथमावगतादपि प्रतियन्तोऽर्थं दृश्यन्ते । नैतदेवं, यदि प्रथमश्रुतादवगच्छेयुः, अपि तर्हि सर्वेऽवगच्छेयुः । पदार्थविदोऽन्ये च न त्वपदार्थविदोऽवगच्छन्ति । तस्मान्नैतदेवम् । ननु पदार्थविद्भिरप्यवगच्छद्भिरहृत एव वाक्यार्थसम्बन्धो भविष्यति, पदार्थवेदनेन हि संस्कृताः अवगमिष्यन्ति, यथा तमेव पदार्थं द्वितयादिश्रवणेन इति । नेति ब्रूमः । यदि वाक्येऽन्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति, उपकारस्तु तदानीं पदार्थ ज्ञानादवकल्प्यते । तस्मात् कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा, न पदार्थद्वारेण सम्भवति वाक्यार्थज्ञानमिति ।

ननु एवं भविष्यति—सामान्यवाचिनः पदस्य गौः—इति वा, अश्वः इति वा, विशेषकं शुक्लः इति वा कृष्णः इति वा पदं अन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते । तन्न । न हि, कथमिव, गौरिति वा अश्वः इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुतिजनिता, वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्त्तेत । न च, शुक्लः इत्यादेर्विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः । न च अनर्थको मा भूदित्यर्थपरिकल्पना शक्या । अतो न पदार्थजनितो वाक्यार्थः ।

तस्मात् कृत्रिमः। पदसङ्घाताः खल्वेते, सङ्घाताश्च पुरुषकृता दृश्यन्ते, यथा, नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः। नीलकौशेयसंवीताः प्रणृत्यन्तीव कादम्बाः। अतो वैदिका अपि पुरुषकृता इति।

तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ (उ०)

तेष्वेव पदार्थेषु भूतानां वर्त्तमानानां पदानां क्रियार्थेन समुच्चारणम्। न, अनपेक्ष्य पदार्थान्, पार्थगर्थ्येन वाक्यमर्थान्तरे प्रसिद्धम्। कुतः? प्रमाणाभावात्, न किञ्चन प्रमाणमस्ति, येन प्रमिमीमहे। न हि, अनपेक्षितपदार्थस्य वाक्यान्त्यवर्णस्य पूर्ववर्णजनितसंस्कारसहितस्य शक्तिरस्ति पदार्थेभ्योऽर्थान्तरे वर्त्तितुम् इति।

ननु अर्थापत्तिरस्ति, यत् पदार्थव्यतिरिक्तमर्थमवगच्छामः, न च शक्तिमन्तरेण तदवकल्पते इति। तन्न। अर्थस्य तन्निमित्तत्वात्, भवेदर्थापत्तिः, यद्यसत्यामपि शक्तौ नान्यन्निमित्तमवकल्पेत। अवगम्यते तु निमित्तम्। किम्?। पदार्थाः। पदानि हि स्वं स्वं पदार्थमभिधाय निवृत्तव्यापाराणि। अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति। कथम्?। यत्र हि शुक्लः—इति वा कृष्णः—इति वा गुणः प्रतीतो भवति, भवति खल्वसावलं गुणवति प्रत्ययमाधातुम्। तेन गुणवति प्रत्ययमिच्छन्तः केवलं गुणवचनमुच्चारयन्ति, सपत्स्यते एषां यथासङ्कल्पितोऽभिप्रायः, भविष्यति विशिष्टार्थसम्प्रत्ययः, विशिष्टार्थसम्प्रत्ययश्च वा-

क्यार्थः,—एवं चेत्, अवगम्यते अन्यत एव वाक्यार्थः । को
तुचित् अदृष्टा पदसमुदायस्य शक्तिः, अर्थात् अवगम्यते—
इति वदिष्यति । अपि च अन्वयव्यतिरेकाभ्यामेतदवगम्यते,
भवति हि कदाचिदियमवस्था,—मानसादप्याघातात्
यत्, उच्चरितेभ्यः पदेभ्यो न पदार्था अवधार्यन्ते, तदानीं
नियोगतो वाक्यार्थं नावगच्छेयुः । यद्यस्य अपार्थगर्थ्यमभ-
विष्यत्, नियोगतस्तु नावगच्छन्ति । अपि च अन्तरेणापि
पदोच्चारणं, यः शौक्ल्यमवगच्छति, अवगच्छत्येवासौ शुक्ल-
गुणकम् । तस्मात् पदार्थप्रत्यये एव वाक्यार्थः । नास्य पद-
समुदायेन सम्बन्धः । यत्तु (३।७।२१) श्रौतः पदार्थो न
वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्त्तितुमर्हति इति । सत्यं,
एवमेतत् । यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावा-
दनर्थकः संजायते—इत्यवगतं भवति, तत्र वाक्यार्थोऽपि
तावद्भवत्विति विशिष्टार्थतावगम्यते । न सर्वत्र । एवं च
सति, गुणान्तरप्रतिषेधो न शब्दार्थः (३।७।२२) इत्येतदपि
परिहृतं भवति । अपि च प्रातिपदिकात् उच्चरन्ती द्विती-
यादिविभक्तिः प्रातिपदिकार्थो विशेषकः—इत्याह । सा च
विशेषश्रुतिः सामान्यश्रुतिं बाधेत । यच्च (३।८।१) एते
धटसंघाताः पुरुषकृता दृश्यन्ते—इति । परिहृतं तत् अस्म-
दर्णादिभिः (१।५।२३) अपि च एवंजातीयकेऽर्थे वाक्यानि
संहर्त्तुं न किञ्चन पुरुषाणां वीजमस्ति ।

**लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ॥२६॥(सि०)**

लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य सन्नियमः

सन्निबन्धनं शक्यं तत्र संहर्तुम्, एवञ्जातीयकानि वाक्यानि नीलोत्पलवनेष्वद्य (३८।२) इति। तस्मात् अग्निहोत्रं जुहुयात् स्वर्गकामः—इत्येतेभ्य एव पदेभ्यो ये अर्था अवगताः, तेभ्यः एवैतदवगम्यते—अग्निहोत्रात् स्वर्गो भवतीति। पदेभ्य एव पदार्थप्रत्ययः,पदार्थेभ्यो वाक्यार्थ इति।

वेदस्य अपौरुषेयताधिकरणम्।

**वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥२७॥ (१पू०)**

उक्तं (४।८।)—चोदनालक्षणोऽर्थो धर्म इति, यतो न पुरुषकृतः शब्दस्यार्थेन सम्बन्धः। तत्र पदवाक्याश्रय आक्षेपः परिहृतः। इदानीमन्यथाऽऽक्षेप्स्यामः—पौरुषेयाश्चोदना इति वदामः,—सन्निकृष्टकालाः कृतका वेदा इदानीन्तनाः,ते च चोदनानां समूहाः,तत्र पौरुषेयाश्चेत् वेदाः, असंशयं पौरुषेयाः चोदनाः। कथम्? पुनः कृतका वेदाः —इति केचिन्मन्यन्ते। यतः पुरुषाख्याः, पुरुषेण हि समाख्यायन्ते वेदाः।—काठकं कालापकं, पैप्पलादकं मौहुलमिति। न हि सम्बन्धादृते समाख्यानं,न च पुरुषस्य शब्देन अस्ति सम्बन्धः, अन्यतः कर्त्ता पुरुषः,कार्य्यः शब्दः—इति। ननु प्रवचनलक्षणा समाख्या स्यात्। नेति ब्रूमः। असाधारणं हि विशेषणं भवति, एक एव हि कर्त्ता, बहवोऽपि प्रब्रूयुः। अतोऽस्मर्य्यमाणोऽपि चोदनायाः कर्त्ता स्यात् तस्मान्न प्रमाणं चोदनालक्षणोऽर्थो धर्म्मः इति।

**अनित्यदर्शनाच्च ॥ २८ ॥ (पू२)**

जननमरणवन्तश्च वेदार्थाः श्रूयन्ते—बबरः प्रावाहणिरकामयत, कुसुरुविन्दः औद्दालकिरकामयत—इत्ये-

